# यौवराज्यम् नाम एकाङ्कं रूपकम्

जग्गू वकुलभूषणः

यदुशैलपुरम् (मेल्कोट्)

(नान्द्यन्ते सूत्रधारः)

सूत्रधारः—आन्तरध्वान्तनाशाय निर्मलालोकवृद्धये ।
उपास्महे महो भक्त्या किमप्याम्नायगोचरम् ॥ १ ॥

(सानन्दं परिक्रम्य) एवमार्यमिश्रान् विज्ञापयामि—

नानानाटकनिर्माता यः कोविदमुदावहः ।
स एवास्यापि कर्ता हि जग्गूवकुलभूषणः ॥ २ ॥

(नेपथ्ये)

आर्य, समाश्वासयतु समाश्वासयत्वेनाम् ।
कमलवनतिरोहितस्स हंसः
सरति न हा विरहातुरां मरालीम् ।

सूत्रधारः—किंनु खल्विदम्? (परिक्रम्य, अवलोक्य) प्रमदवनगतेयमूर्मिलायाश्चेटी वकुलिका खिन्नेव । पश्यामस्तावत् । (निष्क्रान्तः)

(नेपथ्ये)

वत्से, अलं कातर्येण—
विहरति समुपागतोऽधुनायं
सरसितया प्रियया समन्द्रनादः ॥ ३ ॥

(स्थापना)

(ततः प्रविशत्यवरोधगतोर्मिला)

ऊर्मिला— किंनु खलु अद्याप्यार्यपुत्रो न सन्निहितः ।

चेटी—(प्रविश्य) भट्टिनि, सन्निहितः ।

**ऊर्मिला**—कः सन्निहितः?

**चेटी**—कमलवनान्तरितः स मरालः।

**ऊर्मिला**—दिष्ट्या, प्रियं मे। हञ्जे, वकुलिके, विस्तारय अष्टापदमयमष्टापदम्।

**चेटी**—(तथा कृत्वा) निक्षिप्ता शारिपेटिकाऽपि।

(नेपथ्याभिमुखमवलोक्य)

अहो, इत एवागच्छति तन्मरालमिथुनम्।

(ततः प्रविशति हंसमिथुनम्)

**ऊर्मिला**—दिष्ट्या पुनरपि सङ्गतासि वल्लभेन।

(हंसीमादाय चुम्बति। हंसः ऊर्मिलामुपसरति)

**ऊर्मिला**—(हंसमादाय) एनां वल्लभामुज्झित्वा पुनरपि मा गच्छ कमलवनम्। एषा वियोगखिन्ना भवति। (इति परिचुम्ब्य विसृजति)

**लक्ष्मणः**—(प्रविश्य) सत्तमः खल्वरण्यवास एव, यन्मय्येव प्रावहत् विष्णुपदीवैकवेणी आर्यचरणारविन्दशुश्रूषा। हन्त! इदानीं तु त्रिधा विभक्ता, अथवा बहुधा। (विलोक्य स्तम्भान्तर्हितस्तिष्ठति)

(हंसः लक्ष्मणमुपसर्पति।)

(हंसी प्रियमनवलोक्य सभयं परितः पश्यति)

**ऊर्मिला**—(हंसीमादाय)—किं त्वमप्यहमिव!

**लक्ष्मणः**—(हंसपाणिरुपसृत्य) अथकिम्, अथकिम्। (स्मयते)

**ऊर्मिला**—(सौदास्यम्) किमितोऽप्यन्यत्।

**लक्ष्मणः**—वकुलिके, प्रापय मिथुनमेतत् कनकदीर्घिकाम्।

**चेटी**—तथा। (मिथुनमादाय निष्क्रान्ता)

**लक्ष्मणः**—(सस्मितम्)—

ननु मानिनि लोलकुन्तलालि
क्षितिनिक्षिप्तविनिश्चलासिताक्षम् ।
अतिताम्रकपोलमाननं ते
हृदयं मेऽद्य चमत्करोति कान्ते ॥ ४ ॥

(विलोक्य) आम्, विस्तृतमष्टापदम् । एह्येहि । (बाहौ गृहीत्वा कर्षति)

**ऊर्मिला**—(सस्मितमुपगूह्य) ह्यः कथितं विस्मृतमिव?

**लक्ष्मणः**—न खलु विस्मृतम् । सज्जोऽस्मि । (तां पर्यङ्कमारोपयति)

**ऊर्मिला**—(समन्दस्मितं शारिवृन्दमष्टापदे क्रमशो निक्षिप्य) अपि भवतु परिणायः?

**लक्ष्मणः**—हरितहरिद्रे मदीये खलु ।

**ऊर्मिला**—तथैव भवतु ।

**लक्ष्मणः**—तर्हि त्वदीया राक्षसाः ।

**ऊर्मिला**—(सावेगम्) किं नु खल्वत्राऽपि राक्षसनामग्रहणम् ।

**लक्ष्मणः**—(सस्मितम्) ननु, अनयैव क्रीडया राक्षसैः सह युद्धमार्यस्य दर्शयाम इति ।

**ऊर्मिला**—(सस्मितम्) यथार्यपुत्र एव निर्जितो भवेत् ।

**लक्ष्मणः**—हन्त, कृतहस्तेव क्रीडायाम् । भवतु भवतु, पश्यामः । (उभौ क्रीडतः)

**कञ्चुकी**—(प्रविश्य सानन्दम्) सत्तमं खल्वस्माकं दीर्घमायुष्यम् ।

जानुभ्यां मणिकुट्टिमेषु विचरन्नायासयन् वार्धकं
यो बाल्ये परिलालितः प्रमुदितैरस्माभिरालोकितः ।
सोऽयं संप्रति तीर्णविघ्नजलधिः पट्टाभिषेकाञ्चितो
दिष्ट्यानेन विलोक्यते जनकजाभर्ता प्रभुश्चक्षुषा ॥ ५ ॥

(परिक्रम्यावलोक्य) हन्त, दिष्ट्या कुमारमेवं पश्यामि ।

भवतु भवतु, सुकृती खल्वयमेव—

महारण्ये धीमानयमनुसरन् राममनघो
विहायैनां जायां प्रतिकलमपीड्यं परिचरन् ।
अहोरात्रं क्लेशैर्ग्लपिततनुरप्यद्भुततनुं
रघूत्तंसं पश्यन् क्षणवदनयद्दीर्घसमयान् ॥ ६ ॥

(उपसृत्य) जयतु कुमारः ।

**लक्ष्मण**—(सस्मितम्) अथकिम्, प्राप्तजयोऽस्मि । (अक्षद्वयं प्रक्षिपति) (ऊर्मिला सलज्जमुत्तिष्ठति)

**कञ्चुकी**—कुमारं द्रष्टुमिच्छति ।

**लक्ष्मणः**—कः ?

**कञ्चुकी**—महाराजः ।

**लक्ष्मण**—(उत्थाय) कथं, महाराजः मां द्रष्टुमिच्छति ? न त्वार्यं भरतम् ? नापि वत्सं शत्रुघ्नम् ?

**कञ्चुकी**—नहि तौ ।

**लक्ष्मणः**—संस्कारवशतस्तेन समाहूतोऽस्मि साम्प्रतम् ।
यथा कथं वाप्यार्यस्य स्मृतावस्मीत्यहं कृती ॥ ७ ॥

(परिक्रम्य) आर्यजाबाले, क्व महाराजः ।

**कञ्चुकी**—वैडूर्यशालामलङ्करोति । अनेन काञ्चनप्रतीहारेण प्रविशतु कुमारः ।

**लक्ष्मणः**—तदा धन्यो भवेयं, यद्यत्राप्यात्मनः सर्वसेवासु नियोजयेत् दासजनम् (परिक्रामति)

(ततः प्रविशति सीतया सह भद्रासनोपविष्टो रामः)

रामः—अयि, सत्रक्षेत्रसम्भूते, अप्यधुना ते मनः प्रसन्नम् ।

सीता—चिराच्चक्रवर्तित्वपिशुनं सिंहासनं लब्धमार्यपुत्रेण ।

रामः—एतावतैव तुष्टासि ?

सीता—किमन्यत् ।

रामः—प्रिये, अनभिज्ञासि—

चिरन्तनाधिष्ठितसिंहपीठ-
प्राप्त्यैव न स्यात् किल चक्रवर्ती ।
प्रजावनेनैव तु धर्मवृत्त्या
प्रत्नेश्वरान् योऽनुकरोति स स्यात् ॥ ८ ॥

लक्ष्मणः—(विलोक्य) अये, देव्या किमपि सँल्लपति महाराजः भवतु समयं प्रतिपालयामि । (द्वारि तिष्ठति)

सीता—तत्रापि जागरूक एवार्यपुत्रः ।

रामः— (सस्मितं नेपथ्याभिमुखमवलोक्य) कथम्, अम्बाः ! (उत्तिष्ठति)

(सीता स्तोकमपसरति)

(ततः प्रविशन्ति कौसल्याकैकेयीसुमित्राः)

कौसल्या— निषण्णो भवतु वत्सः ।

रामः—(सीतया सह प्रणम्य) भवतु, उपविशामि, उपविशन्त्वम्बाः । (आसनानि दर्शयति)

(सर्वा उपविशन्ति)

रामः—(उपविश्य) किमिदमतर्कितागमनम् ?

अम्बा—भवद्दिदृक्षया सन्निहिताः ।

रामः—महाननुग्रहः । जिगमिषुरहमेवाभूवं भवतीनां दर्शनाय ।

कैकेयी—किन्निमित्तम् ।

रामः—किमपि निवेदयितुम् ।

कौसल्या—निवेदय वत्स!

रामः—चिरन्तनैर्धर्मपरैः समूढं
नृपप्रकाण्डैरवनीभरं तम् ।
मय्यर्पितं संप्रति निस्सहाये
निर्वर्तयेयं कथमेक एव ॥ ९ ॥

(सर्वाः स्मयन्ते)

कैकेयी—साधु भणितं वत्सेन, दुष्करं क्रियते अनेन ।

रामः—अम्ब—

कान्तारे त्वेकाकी दारैः सुसुखं यथेच्छमनुजेन ।
संरक्षितोऽधुनाहं कथमिव वोढुं भरं समर्थः स्याम् ॥ १० ॥

कैकेयी—मामुद्दिश्य भणितमिति तर्कयामि ।

रामः—(कर्णौ पिधाय) शान्तं पापं, शान्तं पापम् । अम्ब, न कदाप्येवं व्याहरति रामः ।

कौसल्या—तर्हि वत्सं भरतं युवराजं करोतु वत्सः ।

रामः—प्रियं नः । कथं मन्यते मध्यमाम्बा ।

कैकेयी—अरण्ये सर्वदा सहायो वत्सलक्ष्मण एव युवराजो भवतु ।

सीता—(स्वगतम्) साधु भणितं मध्यमाम्बया ।

सुमित्रा—वत्सभरत एव युवराजो भवितुमर्हति, यतस्तदा स्वयमुपनतमपि राज्यं परित्यक्तं तेन ।

लक्ष्मणः—साध्वभिहितमम्बया ।

**रामः**—स्यान्नाम, साक्षादेव पृच्छामस्तावत् किमद्यापि चिरयति लक्ष्मणः ।

**लक्ष्मणः**—(उपसृत्य) दासोऽयं प्रणमति ।

(रामं प्रणम्य सर्वा अपि प्रणमति)

**रामः**—एह्येहि वत्स, आसनमिदम् ।

**लक्ष्मणः**—(साञ्जलिबन्धम्) दूरे तिष्ठति दासः ।

**रामः**—किन्नु खल्विदम् ।

**लक्ष्मणः**—दासोचितमिदम् ।

**कौसल्या**—वत्स, जेष्ठभ्रातुर्वचनमनुतिष्ठ ।

(लक्ष्मणः अनिच्छन्नुपविशति)

**रामः**—वत्स !

दयितया सहितो विपिने त्वया
विहितसर्वविधाद्भुतसेवनः ।
गुरुजनानुमतोऽयमिहापि ते
किमपि संप्रति साह्यमपेक्षते ॥ ११ ॥

**लक्ष्मणः**—आदिशतु महाराजः, किङ्करस्य यदुचितम् ।

**रामः**—अभिषेक्तुमिच्छामि ।

**लक्ष्मणः**—कथं अभिषेकः! मम? अस्तु नाम कैङ्कर्यसाम्राज्ये ।

**रामः**—यौवराज्ये ।

**लक्ष्मणः**—हन्त, यौवराज्यं नाम! नानुभूतपूर्वं किल?

**कौसल्या**—इदानीमनुभवतु वत्सः ।

**लक्ष्मणः**—अम्ब, अपरिचिते कथं प्रवृत्तिः ।

**रामः**—(सस्मितम्) मम तावत्परिचितं किमिदं स्वामित्वम् ।

**लक्ष्मणः**—अथ किं, स्वतस्सिद्धमेव ।

**राम**—तर्ह्यनुष्ठीयतां स्वाम्यादेशः ।

**लक्ष्मणः**—(साञ्जलिबन्धम्) न खलु प्रगल्भते शैलमुद्धर्तुं कीटः ।

**कौसल्या**—वत्स, लक्ष्मण, न खल्वनुगुणं तवैतत् ।

**लक्ष्मण**—अम्ब, स्वरूपानुगुणं किल ।

**कैकेयी**—अस्माकं स्वामिनो वचननिर्वहणं पुनः ।

**लक्ष्मणः**—न कदापि स्वभावस्यानपायः ।

**रामः**—तर्ह्यहं निस्सहायः ।

**लक्ष्मणः**—वर्तते किलार्यभरतः ।

**रामः**— मत्प्रार्थनापि सौमित्रे, वन्ध्या हन्त किमु त्वयि ।

**लक्ष्मणः**—न प्रार्थनाधिकारोऽस्ति स्वामिनः किङ्करे मयि ॥ १२ ॥

**कैकेयी**—वत्स लक्ष्मण, किन्तु खल्वेवम् ।

**रामः**—चिरादेवमयम्, कः कोऽत्र भोः ।

**कञ्चुकी**—(प्रविश्य) आज्ञापयतु महाराजः ।

**राम**—भरतं द्रष्टुमिच्छामि ।

**कञ्चुकी**—प्रस्थितोऽस्मि । (निष्क्रान्तः)

**रामः**—पारतन्त्र्यैकतानो हि भरतो मत्परायणः ।
स्वीकुर्याद्यौवराज्यं स मदाज्ञापरवान् नतः ॥ १३ ॥

(ततः प्रविशति कञ्चुकिना सह शत्रुघ्नद्वितीयो भरतः)

**भरतः**—प्रभुरादिशतीति सांप्रतं मे
हृदयं मोदसमुद्रमग्नमास्ते ।

हन्त, किन्तु खल्वेवमहंयुः संवृत्तोऽस्मि!

तदधीनमिदं च किन्तु सिद्धं
निरपायं मयि पारतन्त्र्यमेकम् ॥ १४ ॥

(उपसृत्य) आर्य, स्वाम्यधीनो भरतः प्रणमति । (प्रणम्य सर्वा अपि प्रणमति)

**कैकेयी**—वत्स, लक्ष्मण इव न भव ।

**भरतः**—(साञ्जलिबन्धं) अम्ब, क्व मे तादृशं भाग्यम् ।

तृणाय मन्यमानोऽयं राज्यसौख्यं ममानुजः ।
आर्यस्य विपिने श्रीमान् किङ्करोऽभून्निरन्तरम् ॥ १५ ॥

**रामः**—एह्येहि वत्स, अत्र तावत् मत्साह्यपरो भव ।

**लक्ष्मणः**—आर्य, इदमासनम् । (उत्थाय रामस्य पृष्ठतः तिष्ठति)

**रामः**—इदमासनम् ।

**भरतः**—यथादिशति महाराजः । (उपविशति)

(शत्रुघ्नः सर्वानपि प्रणम्य भरतस्य पृष्ठतस्तिष्ठति)

**कौसल्या**—वत्स, तवाम्बया भणितमन्यथा गृहीतं त्वया ।

**भरतः**—कथम्?

**कौसल्या**—जेष्ठभ्रात्रा आदिष्टो यौवराज्यमनुभवितुं भवान् ।

**भरतः**—(सवैलक्ष्यम्) कथं यौवराज्यम्?

**रामः**—आम । (चिरन्तनैरिति पूर्वोक्तमेव पठित्वा) तत्सहायो भवतु भवान् ।

**भरतः**—वर्तते किल लक्ष्मणः ।

**रामः**—तेन निराकृतम् ।

**भरतः**—आर्य

सर्वथा साह्यकृत् श्रीमांल्लक्ष्मणो विपिने तदा ।
इदानीमप्ययं साह्ये प्रभवत्येव नेतरः ॥ १६ ॥

**रामः**—(दीर्घं निश्वस्य) त्वय्यपि वन्ध्या किमु मत्प्रार्थना ?

**भरतः**—(कर्णौ पिधाय) आर्य, शान्तं पापं, शान्तं पापम् । कोऽहम् ?

सर्वं भवदायत्तं किल—

वसनमपरनिघ्नं काङ्क्षते किं स्वमर्थं
स्वचरणपरिमृष्टिं शीर्षसंवेष्टनं वा ।
प्रभवति हि विधातुं तस्य नेता यथेच्छं
प्रभुरिममुपयुङ्क्तां स्वानुकूल्यानुरूपम् ॥ १७ ॥

**रामः**—महान् प्रमोदः, एहि वत्स । (उत्थायालिङ्गति)

**कञ्चुकी** (प्रविश्य)—देव, सम्प्राप्तः कुलगुरुः ।

**रामः**—अये, कुलगुरुः ! (सर्वे उत्तिष्ठन्ति)

**रामः**—हन्त ! भोः—

अनुमतं युवराजपदं मुदा
मदनुजेन गुरुश्च हिते रतः ।
सुसमये मदनुग्रहतत्परः
पिशुनयन्निव मङ्गलमागमम् ॥ १८ ॥

(ततः प्रविशति वसिष्ठः)

**वसिष्ठः**—दिष्ट्या पश्यामि बन्धुजनबन्धुरं वसुन्धराधीश्वरं रामभद्रम् । हन्त ! कीदृशी अनेनानुभूता क्लेशपरम्परा ! (विचिन्त्य) अथवा एतादृश एव ह्यस्यावतारः—

मत्स्यत्वं कच्छपत्वं च वराहत्वं क गर्हितम् ।
क वैतस्य परत्वं च भक्तार्थं सर्वमादृतम् ॥ १९ ॥

(उपसर्पति । सर्वे प्रणमन्ति)

**रामः**—(सादरम्) इदमासनम् ।

वसिष्ठः—(उपविश्य) उपविशतु महाराजः ।

रामः—यथादिशति भगवान् । (उपविश्य)

अनभ्रवृष्टिकल्पं हि भवदागमनं हठात् ।
सम्पदप्रार्थिताप्येवं स्वयमायाति कुत्रचित् ॥ २० ॥

वसिष्ठः—यत्किञ्चिद्विवक्षुः सन्निहितः ।

रामः—आदिशतु भगवान् ।

वसिष्ठः—महाराजस्य सन्निधौ केनचिद्युवराजेन भवितव्यं किल ।

रामः—हन्त भोः हितैषिणामेकरूपा किल मनोवृत्तिः । भगवन्, इयमेव प्रवृत्तिरिदानीं प्रचलिता ।

वसिष्ठः—महान् प्रमोदः । तर्हि युवराजः कः ?

रामः—भगवान् कथं मन्यते ?

वसिष्ठः—महाराजानुचरो हि लक्ष्मणः ।

लक्ष्मणः—(स्वगतम्) हन्त, भगवानपि किमिदमेवम् !

रामः—तेन कैङ्कर्यात् नान्यदङ्गीक्रियते ।

वसिष्ठः—यौवराज्यं तावन्न निरुणद्धि किल कैङ्कर्यम् ।

(रामः लक्ष्मणं पश्यति)

लक्ष्मणः—(साञ्जलिबन्धम्) भगवन्—

दास्याधिकारयोर्मैत्री तेजस्तिमिरयोरिव ।
तत्किङ्करेण संत्याज्या यत्नेनाप्यधिकारिता ॥ २१ ॥

वसिष्ठः—हन्त भोः, दृढसङ्कल्पोऽयम् ! भरतः कथम् ?

(भरतः साञ्जलिबन्धम् वसनमितरनिभ्नमित्यादि पूर्वोक्तमेव पठति)

वसिष्ठः—महान् प्रमोदः । कः कोऽत्रभोः, सम्भ्रियन्तां सम्भाराः ।

(नेपथ्ये)

सम्भृता एव!

वसिष्ठः—प्रचलन्तु सर्वेऽप्यभिषेकमण्डपम् । (सर्वे परिक्रामन्ति) । आरोहतु कुमारभरतो भद्रासनम् ।

भरतः—यथादिशति भगवान् । (इत्यारोहति नेपथ्ये मङ्गलवादित्रघोषः)

वसिष्ठः—(अभिषिच्य) वत्स युवराज !

छायानुकारी रामस्य नित्यं मङ्गलमाप्नुहि ।

भरतः—सर्वं भगवदनुग्रहात् ।

वसिष्ठः—(लक्ष्मणमवलोक्य)—

रामसङ्कल्पकल्पस्त्वं कैङ्कर्ये भव लक्ष्मण ॥ २२ ॥

लक्ष्मणः—(साञ्जलिबन्धम्) अनुगृहीतोऽस्मि ।

वसिष्ठः—युवराज, किं ते भूयः प्रियमुपहरामि ?

भरतः—पारतन्त्र्यञ्च कैङ्कर्यमावयोः स्थापिते द्वयोः ।
स्वामिसेवात्तसत्तायाः किमितोऽप्यस्ति नः प्रियम् ॥ २३ ॥

तथापीदमस्तु भरतवाक्यम्—

नेतारः परिपालयन्तु भुवनं न्याय्येन सम्यक् पथा
स्याद्गोब्राह्मणमण्डलाय कुशलं लोकोऽस्तु नित्यं सुखी ।
कासारा रसपूरिता विटपिनः पुष्पैः फलैः सम्भृताः
सस्याढ्या धरणिश्च सन्तु समये वर्षन्तु धाराधराः ॥ २४ ॥